॥ सोमस्तोत्रम् ॥

अथ सोमस्तोत्रप्रारम्भः ।
अस्य श्रीसोमस्तोत्रमहामन्त्रस्य गौतम ऋषिः । अनुष्टुप्छन्दः ।
सोमो देवता । सोमप्रीत्यर्थे जपे विनियोगः ।

वां अङ्गुष्ठाभ्यां नमः । वीं तर्जनीभ्यां नमः ।
वूं मध्यमाभ्यां नमः । वैं अनामिकाभ्यां नमः ।
वौं कनिष्ठिकाभ्यां नमः । वः करतलकरपृष्ठाभ्यां नमः ।
वां हृदयाय नमः । वीं शिरसे स्वाहा ।
वूं शिखायै वषट् । वैं कवचाय हुम् ।
वौं नेत्रत्रयाय वौषट् । वः अस्त्राय फट् ।
भूर्भुवः सुवरोमिति दिग्बन्धः ।
ध्यानम् ।
श्वेताम्बरोज्ज्वलतनुं सितमाल्यगन्धं
श्वेताश्वयुक्तरथगं सुरसेविताङ्घ्रिम् ।
दोर्भ्यां धृताभयगदं वरदं सुधांशुं
श्रीवत्समौक्तिकधरं प्रणमामि चन्द्रं ॥ १॥

आग्नेयभागे सरथो दशाश्वश्चात्रेयजो यामुनदेशजश्च ।
प्रत्यङ्मुखस्थश्चतुरश्रपीठे गदाधरो नोऽवतु रोहिणीशः ॥ २॥

चन्द्रं नमामि वरदं शङ्करस्य विभूषणम् ।
कलानिधिं कान्तरूपं केयूरमकुटोज्ज्वलम् ॥ ३॥

वरदं वन्द्यचरणं वासुदेवस्य लोचनम् ।
वसुधाह्लादनकरं विधुं तं प्रणमाम्यहम् ॥ ४॥

श्वेतमाल्याम्बरधरं श्वेतगन्धानुलेपनम् ।
श्वेतछत्रोल्लसन्मौलिं शशिनं प्रणमाम्यहम् ॥ ५॥

सर्वं जगज्जीवयसि सुधारसमयैः करैः ।
सोम देहि ममारोग्यं सुधापूरितमण्डलम् ॥ ६॥

राजा त्वं ब्राह्मणानां च रमाया अपि सोदरः ।
राजा नाथश्चौषधीनां रक्ष मां रजनीकर ॥ ७॥

शङ्करस्य शिरोरत्नं शार्ङ्गिणश्च विलोचनम् ।

तारकाणामधीशस्त्वं तारयाऽस्मान्महापदः ॥ ८॥

कल्याणमूर्ते वरद करुणारसवारिधे ।
कलशोदधिसञ्जातकलानाथ कृपां कुरु ॥ ९॥

क्षीरार्णवसमुद्भूत चिन्तामणिसहोद्भव ।
कामितार्थान् प्रदेहि त्वं कल्पद्रुमसहोदर ॥ १०॥

श्वेताम्बरः श्वेतविभूषणाढ्यो गदाधरः श्वेतरुचिर्द्विबाहुः ।
चन्द्रः सुधात्मा वरदः किरीटी श्रेयांसि मह्यं प्रददातु देवः ॥ ११॥

इदं निशाकरस्तोत्रं यः पठेत् प्रत्यहं नरः ।
उपद्रवात्स मुच्येत नात्र कार्या विचारणा ॥ १२॥

इति सोमस्तोत्रं सम्पूर्णम् ।